धनार्थी धनमाप्नोति मोक्षार्थी मोक्षमुत्तमम् ॥ २५ ॥ लभेत विद्यां विद्यार्थी मुच्येद्रुग्णश्च रोगतः ॥ एतच्छ्रवणमात्रेण सर्वपापक्षयो भवेत् ॥२६॥
ब्राह्मं तेजो लभेद्विप्रः क्षत्रियश्च नरेशताम् ॥ धनं वैश्यः सुखं शूद्रः श्रवणादस्य चाप्नुयात् ॥२७॥ एतच्छ्रुत्वा रणं गच्छन्विजयं चाप्नुयान्नृपः॥प्राप्नुया
त्स्त्री च सौभाग्यं कन्या च स्वेप्सितं वरम् ॥२८॥ एतस्य श्रुतिकीर्त्तिभ्यां शास्त्रजातशिरोमणेः ॥ यंयं यः कामयेत्कामं तंतं प्राप्नोति मानवः ॥
॥२९॥ तस्मात्त्वं सर्वदा भक्त्या पठन्नेतद्द्विजोत्तम ॥ कायवाणीमनोभिस्त्वं भजेथा भक्तवत्सलम् ॥३०॥ सौतिरुवाच ॥ एतन्महासेनमुखाब्जनिःसृतं
सावर्णिरापीय वचोमृतं सः ॥ चकार भक्तिं वसुदेवनन्दने नराकृतिब्रह्मणि सर्वमङ्गले ॥ ३१ ॥ यूयं च सर्वे निगमागमज्ञा ब्रह्मण्यदेवं भज
नीयमीशम् ॥ भजध्वमेकं तमुदारकीर्त्तिं श्रीवासुदेवं निजधर्मसंस्थाः ॥ ३२ ॥ गोलोकधामपतये प्रकाशचयमूर्त्तये ॥ नमोस्तु वासुदेवाय
भक्तानन्दविवृद्धये ॥ ३३ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डे श्रीवासुदेवमाहात्म्ये ग्रन्थसंप्र
दायप्रवृत्तिनिरूपणं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ इति श्रीस्कान्दे महापुराणे द्वितीये वैष्णवखण्डे वासुदेवमाहात्म्यं सम्पूर्णम् ॥ २-९ ॥

इति श्रीस्कान्दे महापुराणे द्वितीयं वैष्णवखण्डं सम्पूर्णम् ॥ २ ॥



इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालये मुद्रितम् । संवत् १९६७, शके १८३२.



॥ इति श्रीस्कान्दे महापुराणे द्वितीयं वैष्णवखण्डं सम्पूर्णम् ॥ २ ॥